४।७० उ० विविधुस्तं चिन्तानामनुपन्थस्तमिवापगाः ।
४।८८ यज्ञान्ते समवभृथाभिषेकपूर्वं सत्कारैः प्रमितपराक्रमाननीकाः ।
कामन्योत्सुकवनितानिबद्धचित्ताः स्वानि स्वान्यवनिभुजः पुरा
अतीयान् ॥
५।४६ स मौमिनीनामधिकमोदरेण सर्वेहितार्थप्रमुखेन दीपान् ।
प्रतिविवांस्तीरमुवाच मन्दं कुत्सेन कावेरिकामिवोर्मिम् ॥
५।५७ गान्धर्वमस्त्रं तदिदः प्रतीच्छ प्रयोगसंहारविभक्तमन्त्रम् ।
प्रस्वापनं नाम यतः प्रहर्तुर्न चारिहिंसा विजयः स्वहस्ते ॥
५।६७ निद्रावशं त्वयि गते शशिना कथञ्चि-
दात्मानमाननरुचा नवतां विमुच्य ।
लक्ष्मीर्विभातसमयेऽपि हि दर्शनेन
पर्युत्सुका प्रणयिनी निशि वल्लभेव ॥
५।६९ मन्द विवाति हिमसंभृतशीतभावः
संयुज्यते सरसिजैररुणांशुभिन्नैः ।
सौरभ्यमीप्सुरिव ते मुखमारुतस्य
वक्षो गुणान् प्रतिनिशापरिणामवायुः ॥
५।७० उ० संलक्ष्यते दशनचन्द्रिकयानुविद्धं
बिम्बाधरलब्धपरभागमिव स्मितं ते ॥
५।७५ इति स विहितनिद्रस्तल्पमभ्येतरात्मा
सुरगज इव गाङ्गं सैकतं सुप्रतीकः ।
परिजनवनितानां पादयोर्व्यापृताना
वलयमणिविदिष्टं प्रच्छदान्तं मुमोच ॥
६।२ स तत्र मञ्चेषु विमानकल्पेष्वाकल्पसंमूर्च्छितरत्नशोभाम् ।
सिंहासनस्थान् नृपतीनपश्यत् भुवान् प्रशस्तानिव हेमशैलान् ॥
६।३४ उ० दिवापि ज्योत्स्नान्तरचन्द्रिकायां नारीजनः स्पर्शसुखानि भुङ्क्ते ॥
६।५४ रणेष्वभिवीजतया प्रकामः शरासनज्यानिकषौ भुजाभ्याम् ।
विस्पष्टरेखौ रिपुविक्रमाग्नेर्निर्वाणमार्गाविव यो बिभर्ति ॥
६।५९ अथाभिगम्योरगराजकल्पं पतिं पुरस्योरगपूर्वनाम्नः ।
आचारपूतोन्नतवंशदीपं मुखान्तरेषा जगदे कुमारी ॥
६।७५ वाणिनीनां = पाणिनीनाम् इति पाठे पणन्ते व्यवहरन्ते तच्छीलाः ।
७।८ स्तनन्धयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती ।
संप्रस्नुताभ्यां पदवीं स्तनाभ्यां सिषेच काचित् पयसा गवाक्षात् ॥

१२।८० क्लेशेन महता निद्रां त्याजितं रणदुर्जयम् ।
रावणः प्रेषयामास युद्धायानुजमात्मनः ॥
स जघान तथादेशात् कपीनुग्राननेकशः ।
विवेश च पुरीं लङ्कां समादाय हरीश्वरम् ॥

१३।१५ निस्त्रिंशकल्पाय निषेव्यमानामेषा तमालद्रुमराजिनीला ।
दूरादरालाङ्कु विभाति वेला कलङ्कलेखामलिनेव धारा ॥

१३।४९ श्रियं सुमेरोऽनुगिरं तमालस्तस्य प्रवालोपचयेन यस्य ।
कर्णार्पितेनाकरवं कपोलमभ्राप्तकालागुरुपत्रलेखम् ॥

१३।५७ तमिस्रया सूक्ष्मनिभेव भिन्ना कुन्दस्रगिन्दीवरमालयेव ।
कृत्तिर्हरेः कृष्णमृगत्वचेव भूतिः स्मरारेरिव कण्ठभासा ॥
दुग्धार्णवा शारदमेघलेखा निशीथिनिस्त्रिंशरुचा दिवेव ।
गवाक्षजालागुरुधूमराज्या कुम्भस्थलीलेपभुवा नवेव ॥
तुषारसंघातशिला हिमाद्रेर्नीलस्थलग्रस्तरशोभयेव ।
पतत्त्रिणां मानसगोचराणां श्रेणीव कादम्बविहङ्गपङ्क्त्या ॥
नितान्तशुद्धस्फटिकावबोधात् वैडूर्यकान्त्या रसनावलीव ।
गङ्गा रवेरात्मजया समेता पुष्णात्युदारं परभागमेषा ॥ जा.

१४।१ प्रत्यागतौ तत्र चिरप्रवासादपश्यतां दाशरथी जनन्यौ ।
कुमुद्वती शीतमरीचिलेखे दिवेव क्षपान्तरदुर्विभाव्ये ॥

१४।७० केयं वने लक्ष्मण लक्ष्मणेति दीनाक्षरं रोदिति योषिदुच्चैः ।
का आगतेषा जनकात्मजेति कविर्विचिन्त्यान्तिकमाजगाम ॥
कविः = मुनिः कुन्तकः

१५।६९ तदाकर्ण्य मुनेर्वाक्यं रामो राजीवलोचनः ।
समं हर्षविषादाभ्यां युयुजे नीतिकोविदः ॥

१५।९४ गच्छ लक्ष्मण शीघ्रं त्वं मा भूद् धर्मविपर्ययः ।
त्यागो वापि वधो वापि साधूनामुभयं समम् ॥

१६।१२ ज्वलन्मुखो०

१७।४६ प्रमदामुखादिविमुखे चपलापि स्वभावतः ।
निकषे हेमलेखेव श्रीरस्मिन्ननपायिनी ॥

१८।१६ तस्माद् वसुनाथ दत्ताभिमानो दमान्वितः पद्मनाभसंहः ।
कुन्दाग्रदन्तो रिपुदन्तिसिंहः पतिः पृथिव्याः कुलकैरवेन्दुः ॥

१८।१९ हित्वोपभोगांस्तपसोत्तमेन त्रिविष्टपं प्राप्तवति क्षितीशे ।
तदात्मजः सागरधीरचेताः शशास पृथ्वीं सकलां नृसोमः ॥

१९।५ न्यद्विगन्तमधिकर्धिकस्तवः पूर्वमुखसरसीरुहद्युतरः !

१९।१४ लोलमाल्य = लोलमाल० वामनः

---

